## ऋग्वेदीय-शाङ्खायन

# रुद्राध्यायः

सम्पादकोऽनुवादकश्च

**प्रकाशपाण्डेयः**



**इन्दिरा गाँधी राष्ट्रीय कला केन्द्र**

भारतीय श्रौत एवं स्मार्त दोनों परम्पराओं में शिव आराधना, वृषोत्सर्ग आदि अनेक याज्ञिक क्रियाओं में रुद्राध्याय का पाठ अनादि काल से होता आ रहा है। नियमतः जो व्यक्ति वेद की जिस शाखा का पारम्परिक रूप से अध्यायी होता है उसे अपनी ही शाखा में प्रतिपादित रुद्राध्याय का पाठ करना अनिवार्य होता है। ऋग्वेदीय रुद्राध्याय अभी तक एकमात्र शाकल-संहिता के पाठ के रूप में उपलब्ध था। पहली बार दक्षिण राजस्थान के बाँसवाड़ा जिले में नागर ब्राह्मणों के द्वारा संरक्षित ऋग्वेद की शाङ्खायन शाखा का रुद्राध्याय प्रकाशित हो रहा है। प्रस्तुत रुद्राध्याय अन्य प्रसिद्ध रुद्राध्यायों से कई दृष्टियों से विशिष्ट तथा महत्त्वपूर्ण है क्योंकि इससे एक सर्वथा प्राचीन पाठ एवं उसकी पाठ-परम्परा से पाठकों को परिचय प्राप्त होगा। इसके प्रकाशन से निश्चित रूप से वैदिक साहित्य, इतिहास एवं संस्कृत के प्रेमी, अध्येता एवं विद्यार्थी लाभान्वित होंगे।

ट्मा॒य॒ तव्य॑से। वो॒चेम॒ शंत॑मं

र॒त्पश्वे॒ नृभ्यो॒ यथा॒ गवे॑। यथा॑

नो मि॒त्रो वरु॑णो॒ यथा॑

जोष॑सः॥३॥ गा॒थप॑तिं मे॒धप॑तिं

सु॒म्नमी॑महे॥४॥ यः शु॒क्र इ॑

ष्ठो दे॒वानां॒ वसु॑ः॥५॥ शं नः

नृभ्यो॒ नारि॑भ्यो॒ गवे॑॥६॥ अ॒स्मे

हि श॒तस्य॑ नृ॒णां। म॒हि

ोमपरि॒बाधो॒ मारा॑तयो जुहु॒रंत।

यास्तै॑ प्र॒जा अ॒मृत॑स्य पर॑स्मिन्

वेन आ॒भूष॑न्तीः सोम वेदः॥९॥

# ।। अथ ऋग्वेदीय-शाङ्खायन-रुद्राध्यायः ।।

सम्पादकोऽनुवादकश्च

**प्रकाशपाण्डेयः**



इन्दिरा गाँधी राष्ट्रीय कला केन्द्र

जनपथ, नई दिल्ली

**Cataloging in Publication Data — DK**
[Courtesy: D.K. Agencies (P) Ltd. <docinfo@dkagencies.com>]

**Śāṅkhāyanarudrādhyāya. Hindi & Sanskrit.**
Atha Ṛgvedīya-Śāṅkhāyana-Rudrādhyāyaḥ/
sampādako'nuvādakaśca, Prakāśapāṇḍeyaḥ
p. cm.
In Sanskrit; translation and introductorymatter in Hindi.
Hymns in praise of Rudra (Siva), Hindu deity.
Includes bibliographical references.
ISBN 13: 9788185503158
ISBN 10: 818550315X

1. Rudra (Hindu deity) — Prayers and devotions.
2. Vedas. Ṛgveda — Criticism, interpretation, etc.
I. Śāṅkhāyana. II. Pāṇḍeya, Prakāśa, 1955-
III. Title.

DDC 294.538 22

ISBN13: 978-81-85503-15-8 ISBN10: 81-85503-15-X

*सर्वप्रथम भारत में प्रकाशन वर्ष, 2009*

*प्रकाशक*:
इन्दिरा गान्धी राष्ट्रीय कला केन्द्र
जनपथ, नई दिल्ली — 110 001
फोन: (011) 2338 1303 फैक्स: 2338 8280
ई-मेल kalakosa_ed@yahoo.co.in वेब: www.ignca.nic.in

*वितरक*:
डी०के० प्रिंटवर्ल्ड (प्रा०) लि०
पंजीकृत कार्यालय : *'श्रीकुंज,'* एफ-52, बाली नगर,
रमेश नगर मेट्रो स्टेशन, नई दिल्ली — 110015
फोन: (011) 2545 3975; 2546 6019; फैक्स: (011) 2546 5926
ई-मेल: dkprintworld@vsnl.net वेब : www.dkprintworld.com

# प्राक्कथन

सामुदायिक, पारिवारिक तथा व्यक्तिगत विपत्तियों एवं संभावित संकटों के निवारण हेतु शिव के तेजस्वी, उग्ररूप रुद्र की वैदिक मन्त्रों से स्तुति, उनके अभिषेक तथा अग्नि में हवन आदि संपादित करने की परम्परा वैदिक काल से ही चली आ रही है ('ऋग्विधान') और स्मृति-काल से होती हुई आज भी सुरक्षित तथा लोकप्रिय है। उत्तर भारत में इस हेतु प्रायः शुक्ल यजुर्वेद (माध्यंदिन) की रुद्राष्टाध्यायी का पाठ किया जाता है। किन्तु अन्यत्र वेद की विभिन्न शाखाओं को मानने वाले प्रायः अपनी-अपनी ही संहिता के मन्त्रों से इस विधान को संपादित करते हैं। प्रत्येक वैदिक संहिता में रुद्र की स्तुति में पर्याप्त मन्त्र हैं जिनको संकलित करके रुद्र याग में प्रयोजनीय पद्धतियाँ बनी हुई हैं। यह भी विधान है कि जिसे अपनी वैदिक संहिता का परिज्ञान न हो, वह तैत्तिरीय संहितान्तर्गत रुद्रमन्त्रों से इस अनुष्ठान को संपादित कर सकता है।

कौषीतकि संहिता ऋग्वेद की उन 21 संहिताओं में एक है जो महर्षि पतञ्जलि (द्वितीय शती ई॰ पू॰) के अनुसार कभी भारत में उपलब्ध थीं। उनमें भी प्राचीन ग्रन्थों में पाँच (शाकल, आश्वलायन, कौषीतकि, बाष्कल एवं माण्डूकायन) का प्रमुखतया उल्लेख हुआ है, जिनमें से आज बाष्कल एवं माण्डूकायन पूर्णतया विलुप्त हैं। शाकल ही मुख्यतया पठन-पाठन में है। आश्वलायन के हस्तलेख तो उपलब्ध हैं किन्तु पाठ परम्परा का लोप हो चुका है। सौभाग्य से कौषीतकि के हस्तलेख भी उपलब्ध हैं और राजस्थान के दक्षिण (बाँसवाड़ा) में

आकर बसे हुए कुछ गुजराती नागर ब्राह्मणों में इसकी अत्यन्त क्षीण होती हुई पाठ-परम्परा भी जीवित है। यद्यपि इन पण्डितों को सम्पूर्ण संहिता आद्योपान्त कण्ठस्थ नहीं है तथापि ग्रन्थ देखकर ये अपने समुदाय की विशिष्ट पाठपद्धति से स्वरसहित उसका शुद्ध उच्चारण कर सकते हैं। पण्डितों का यह वर्ग अपने समस्त लौकिक एवं वैदिक कर्म (जात-कर्म, यज्ञोपवीत, विवाह, अन्त्येष्टि आदि) कौषीतकि संहिता के मन्त्रों से ही संपादित करता है।

सन् २००६ के प्रारम्भ में इन्दिरा गाँधी राष्ट्रीय कला केन्द्र के कलाकोश संविभाग की ओर से बाँसवाड़ा में एक वैदिक सम्मेलन आयोजित किया गया था जिसमें कौषीतकि संहिता के मूल पाठ को प्रकाशित करने तथा उसके अध्यायियों की पाठ-प्रक्रिया को रिकॉर्ड करने का निर्णय लिया गया था। इस हेतु विशेषतः श्री पं० हर्षद नागर एवं श्री पं० इन्द्रशंकर नागर द्वारा कुछ हस्तलेखों की छाया-प्रतियाँ तो उपलब्ध कराई ही गईं, साथ ही उन दोनों ने अनेक सूक्तों की पाठ-प्रक्रिया भी रिकॉर्ड कराई। इन्हीं प्राप्त हस्तलेखों में कौषीतकि, या 'शांखायन' अपरनाम से प्रसिद्ध, इस ऋग्वेदीय संहिता का यह रुद्राध्याय भी था जिसे भली-भाँति सम्पादित करने के लिए हमने वेद एवं आगम आदि अनेक विषयों के विद्वान् अपने शिष्य डॉ० श्री प्रकाश पाण्डेय (वर्तमान में राष्ट्रिय संस्कृत संस्थान के अन्तर्गत 'गरली' विद्यापीठ में प्राचार्य) को समर्पित किया और आज यह सुसम्पादित तथा अनूदित होकर प्रथम बार विद्वानों को उपलब्ध हो रहा है। यह रुद्राध्याय अभी तक प्रकाश में नहीं आया था। उज्जैन के वेदविद्या प्रतिष्ठान द्वारा भी विभिन्न रुद्राध्यायों का एक संकलन सुश्री प्रज्ञा पाण्डेय द्वारा सम्पादित एवं अनूदित होकर प्रकाशित है किन्तु उसमें शांखायन-कौषीतकि के इस रुद्राध्याय को संकलित नहीं किया गया है।

डॉ० प्रकाश पाण्डेय को रुद्राध्याय का जो हस्तलेख उपलब्ध था वह न तो पूर्ण था, न ही पूर्णरूप से शुद्ध कहा जा सकता है। अत्यन्त परिश्रम पूर्वक 'स्मृति कौस्तुभ' एवं 'ऋग्विधान' आदि प्राचीन ग्रन्थों को

देख कर उन्होंने मन्त्रों की संख्या एवं उनका क्रम निर्धारित किया तथा उन्हें व्यवस्थित रूप से सँजो कर, उनका अनुवाद प्रस्तुत किया। इस प्रकार अब यह ग्रन्थ अत्यन्त प्रामाणिक बन गया है।

संपूर्ण ऋग्वैदिक कौषीतकि संहिता के प्रकाशन की योजना भी इन्दिरा गाँधी राष्ट्रीय कला केन्द्र में है। यदि ईश्वर की अनुकम्पा प्राप्त रही तो वह भी शीघ्र प्रकाश में आयेगी। थोड़ा बहुत प्रयास कौषीतकि संहिता के मौखिक पाठ को बचाने का भी हो रहा है, इत्यलम्।

**गया चरण त्रिपाठी**
विभागाध्यक्ष, कलाकोश

# अनुक्रमणिका

# ऋग्वेदशाङ्खायनशाखीयरुद्राध्यायप्रत्यायनम्

दिव्यं ज्योतिः सलिलपवनैः पूरयित्वा त्रिलोकी-
मेकीभूतं पुनरपि च तत्सारमादाय गोभिः ।
अन्तर्लीनो विशसि वसुधां तद्गतः सूयसेऽन्नं
तच्च प्राणास्त्वमिति जगतां प्राणभृत् सूर्य आत्मा।।

–वेदार्थदीपिकायाम् २।१७।

१.१ वेदे सम्प्रदायद्वयमभ्युपगम्यते। एको ब्रह्मणा प्रवर्तितः। अपरश्चादित्येन प्रकाशितः। सर्वत्र देशे भृशं मुद्रितानामृगादिसंहितानां कालविलासवशादध्ययने क्षीणतायां सत्यामप्यद्यापि भरतभूमावुभयोः सम्प्रदाययोः चतुर्णां वेदसंज्ञकसंहितानां श्रुतिपरम्परया गुर्वध्ययन-पूर्वकमविच्छिन्नमभ्यसनं भवत्येव। इयमविच्छिनाध्ययनपरम्परा वेदस्यापौरुषेयत्वमपि प्रमाणयति। प्रमाणाकारस्तु –

वेदः अपौरुषेयः, अध्येतृपरम्परयाध्ययनाध्यापनस्याविच्छेदे सति कर्तुरस्मरणात्, आत्मवत्। इति।

अथोक्तयोः संप्रदाययोः विषये वराहपुराणे आख्यायिका स्मर्यते। तथा हि कल्पादौ शङ्खासुरापरनामा हयग्रीवाख्यः दैत्यः वेदमपजहार। ज्ञानरूपवेदस्य रक्षार्थं परमकारुणिको भगवान् श्रीविष्णुर्हयग्रीवं व्यापाद्य वेदञ्चोद्धृत्य ब्रह्मणे प्रादात्। ब्रह्मा तं वेदं द्विधा विभज्यैकं भागं भगवत्यादित्ये संरक्ष्यापरञ्च भागं स्वपुत्रादिभ्यो वसिष्ठाङ्गिरोमरीचिभृग्वत्रिप्रमुखेभ्यो-ऽध्ययनानुशासनविधिना प्रायच्छत्। तेऽपि स्वपुत्रपौत्रगोत्रशिष्यप्रशिष्येभ्यो-ऽध्यापयामासुः।

१.२ अग्रे द्वापरयुगान्ते भगवान् कृष्णद्वैपायनः मनुष्यानल्पवीर्यान् स्वल्पसत्त्वाँश्च दृष्ट्वा तान् प्रत्यनुजिघृक्षया ब्रह्मणा प्रकाशितं पूर्वोक्तं

वेदञ्चतुर्धा व्यस्य पैलाय ऋग्वेदं, वैशम्पायनाय यजुर्वेदं, जैमिनये सामवेदं, सुमन्तवे चाथर्ववेदमध्ययनविधिना प्रायच्छत्। सेयं वेदचतुष्टयी 'ब्रह्मसम्प्रदायः' इति कथ्यते। अनन्तरं कस्मिँश्चित्काले भगवान् योगीश्वरो याज्ञवल्क्यः महर्षेर्विदग्धशाकल्याद् ऋग्वेदमध्यगात्। दुर्दैवादेकदाकस्मिक-कारणवशाद् गुरुणा सह विवादे संवृत्ते याज्ञवल्क्यो गुरोः शापभिया तस्मात् प्राप्तं वेदं तत्याज। ततो वेदवर्जितः जातः। तस्मात् खिन्नः सन् स्वमातामहं वैशम्पायनमुपगम्य यजुर्वेदमधीतवान्। अत्रापि गुरुणा सह वैमत्ये जाते तदधीतमपि वेदं तत्याज। ततः नाहम्मानुषमाचार्यमभ्युपैमीति निश्चित्य तपस्तप्त्वा भगवन्तमादित्यं तुष्टाव। अनुग्रहावतारो भगवानादित्यो याज्ञवल्क्यं ब्रह्मणा स्वमण्डले निहितान् ऋग्यजुस्सामाथर्वाख्यान् वेदानध्यापयामास। अध्ययनानन्तरं लोककल्याणाय वेदप्रचारार्थमाप्तगुर्वाज्ञो योगीश्वरो वेदविद्यां स्वशिष्येभ्यः प्रादात्। एवं हि, ऋग्वेदं शांखायनाय, यजुर्वेदं काण्वमाध्यंदिनादिभ्यः, कौथुमापराभिधानाय सामश्रवसे सामवेदं, शौनकायाथर्ववेदं यथोक्तविधिना प्रायच्छत्। इयं वेदचतुष्टयी 'आदित्यसंप्रदायः' इति कीर्त्यते। एवं संप्रदाययुगले न्यस्तस्य पाठपरम्परया व्यस्तस्य च ऋग्वेदस्य ब्रह्मसम्प्रदाये विंशतिप्रवक्तारः सञ्जाता आदित्यसम्प्रदाये चैकः शाङ्खायन एव प्रवक्ता बभूव। शाङ्खायनेन प्रचारितस्य ऋग्वेदस्य प्रवचनविस्तरोऽग्रे शाखान्तररूपेण न जातः।

१.३ अत्र केनचिदुच्येत का नाम शाखेति। तत्रोच्यते किञ्चित्। शाखानाम वेदैकदेशः इत्यभियुक्ताः वदन्ति। वेदैकदेश इति कथनेन यथा न कश्चिद्विचिकित्सेत् तथानतिविस्तरेणैवं बोद्धव्यम्। आदौ ब्रह्मा एकमेव वेदं प्रणिनाय। द्वापरान्ते तस्य मूलवेदस्य ऋग्यजुस्सामाथर्वभेदेन चतुर्धा व्यासः जातः। यथोक्तं भारते शान्तिपर्वणि

त्रेतायां संहता वेदा यज्ञा वर्णास्तथैव च।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे।।

२३८।१०४ इति।

तस्मात् ब्रह्मोक्तमूलवेदावच्छेदेन ऋग्यजुस्सामाथर्ववेदा अपि वेदैकदेशत्वाच्छाखा एवेत्यभिधातुं शक्यन्ते। ततः ऋगादीनां वेदानां प्रवाचकेभ्यः

तत्समानार्थाः संहिताः प्रदत्ताः। ताश्च संहिताः तत्तद्वेदानां न्यूनातिरिक्तपद-प्रकाशकत्वात् तत्तद्वेदानामेकदेशमेवोपस्थापयन्ति न त्वखिलं वेदम्। तस्मात् ऋगाद्यवच्छेदेन शाकलशाङ्खायनादयोऽपि शाखा इत्युच्यन्ते। यथोक्तं तत्रैव—

ऋग्यजुःसामशाखानामेकैका व्याकृतास्त्वया।
तावता तत्समानार्था जाताः शाखास्ततः पराः।। इति।

तथा च तत्तद्वेदगतभेदेष्वेवान्यतमैका संहिता शाखेत्युच्यते। एवं च ऋग्वेदे एकविंशतावन्यतमा शाङ्खायनी शाखेति भवति। आदिप्रवचनकर्तृभेदेन काचिद्विशिष्टा पाठपरम्परा प्रवर्तते। सर्वासां पाठपरम्पराणाम् आनुपूर्वी तत्तत्स्थलेषु यथावत् सुरक्षिता स्यादित्येतदर्थं सर्वाः शाखाः मूलप्रवाचकस्य नाम्नैवाभिधीयन्ते भिद्यन्ते च। अत्र प्रकरणे शाङ्खायनः कौषीतकिः आदित्यसम्प्रदायादागतां ऋग्वेदसंहितामवाप। स एव प्रथमः प्रचारकः जातः तस्मात्तस्यैव नाम्ना संहितायाः शाखाविशेषस्य आनुपूर्वी कीर्त्यते। यदप्यन्यपुराणेषु शाङ्खायनशाखाया उल्लेखं न पश्यामः किन्त्वग्निपुराणं तु ऋग्वेदस्य शाखाद्वयमेव स्मरति तद्यथा—

भेदः शांखायनश्चैक आश्वलायनो द्वितीयकः।।

२७१।२।। इति।

२.१ सेयं शाङ्खायनी शाखा उत्तरे गुर्जरे प्रदेशे प्रचारितासीत्। अस्मिन् विषये हिलेब्राण्टमहोदयः शाङ्खायनश्रौतसूत्रस्य भूमिकायां प्रथमे पत्रे महार्णवाख्याद् ग्रन्थात् श्लोकमुदाहरति—

तद्यथा—

उत्तरे गुर्जरे देशे बह्वृचः परिकीर्तिताः।
कौषीतकिब्राह्मणं च शाखा शाङ्खायनी स्थिता।। इति।

ऋग्वेदाध्यायिनः बह्वृच इत्युच्यन्ते। अद्यापि गुर्जरेष्वेवेयं शाखा यत्र-कुत्र नागरोपाह्वेषु कौषीतकिगोत्रे लब्धजनिषूपाध्यायेषु संरक्षिता वर्तते। तेष्वन्यतमस्याभिज्ञानं देहलीस्थ-इन्दिरागाँधी-राष्ट्रीय-कलाकेन्द्रस्य

शोधाधिकारिणः श्रीमदाचार्यगयाचरणत्रिपाठिपुरोगमाः कलाकोशविभागीयाः विद्वांसः अकुर्वन्। महतायासेन च तैः शाङ्खायनानां रुद्रजपपाठस्य कोशः (हस्तलेख इति भाषायाम्) राजस्थानप्रान्तस्य बाँसवाड़ा इति ग्रामवास्तव्यस्य श्रीहर्षदनागरमहोदयस्य सकाशादुपलब्धः। अपि चास्य रुद्रजपस्य दृश्यध्वनिमुद्रणमपि इन्दिरागाँधी-राष्ट्रीय-कलाकेन्द्रस्याधिकारिभिः कारितम्।

२.२ शाङ्खायनशाखाभ्यासिनस्त्वद्य भारतभूमावपि क्वाचित्का एव सन्ति। तस्मात् शाङ्खायनरुद्राध्यायस्योपलब्धिरतिशयेन महत्त्वावहा समादरणीया प्रकाशनीया प्रचारणीया चास्त्येव। तथा हि गुरुणा श्रीमदाचार्यगयाचरणत्रिपाठिना प्रचोदितः सन् एष रुद्रजपकोशोऽशेषसत्पात्रग्राह्यरूपः बहूनामुपकारकः यथा स्यात्तथा संस्करोमि। परमेश्वरस्यानुग्रहादचिरादेव याजकेभ्यो भक्तेभ्यश्च सुलभीकरिष्यते।

३.१ यज्ञस्य त्रिधा सम्पादनं भवति वैदिकविधिना तान्त्रिकरीत्या वैदिकतान्त्रिकमिश्रविधिना च। यथोक्तं श्रीमद्देवीभागवते-

**वैदिकस्तान्त्रिको मिश्रस्त्रिविधो मख इष्यते।।** इति।

सर्वत्र भारते नित्यकाम्योभयरूपेण रुद्रस्योपासना वैदिकतान्त्रिक मिश्रविधिना महत्या श्रद्धया भवति। यतः परमेश्वरः शिव एव सर्गरूपेण स्थित्वा अपरोक्षतया सर्वाननुगृह्णाति ततोऽस्य प्रत्यक्षरूपस्येश्वरस्य श्रौतं स्वरूपमत्र गीयते। तद्यथा शतपथश्रुतौ कल्याणापरपर्यायस्य परमेश्वरस्य रुद्रस्य सर्वरूपत्वमेवमाम्नायते-

"प्रजापतिर्वा इदमग्र आसीदेक एव। सोऽकामयत स्यां प्रजायेयेति। सोऽश्राम्यत् स तपोऽतप्यत। तस्माच्छ्रान्तात् तेपानादापोऽसृज्यन्त। तस्मात् पुरुषात्तप्तादापो जायन्ते।।१।।

आपोऽब्रुवन्- क्व वयं भवामेति। तप्यध्वमित्यब्रवीत्। ता अतप्यन्त। ताः फेनमसृजन्त। तस्मादपां तप्तानां फेनो जायते।।२।।

फेनोऽब्रवीत्- क्वाहं भवानीति। तप्यस्वेत्यब्रवीत्।

सोऽतप्यत। स मृदमसृजत। एतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते। स यदोपहन्यते मृदेव भवति।।३।।

मृदब्रवीत्– क्वाहं भवानीति। तप्यस्वेत्यब्रवीत्। सातप्यत। सा सिकता असृजत। एतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवति। एतावन्नु तद् यत् क्वाहं भवानि क्वाहं भवानीति।।४।।

सिकताभ्यः शर्करामसृजत। तस्मात् सिकताः शर्करैवान्ततो भवति।। शर्करया अश्मानम्। तस्माच्छर्कराश्मैवान्ततो भवति। अश्मनोऽयः। तस्मादश्मनोऽयो धमन्ति। अयसो हिरण्यम्। तस्मादयो बहुध्मातं हिरण्यसंकाशमिवैव भवति।।५।।

यद् यदसृज्यत। अक्षरत् तत्। यदक्षरत् तस्मादक्षरम्। यदष्टौकृत्वोऽक्षरत्। सैवाष्टाक्षरा गायत्र्यभवत्।।६।।

अभूद्वा इयं प्रतिष्ठेति। तद्भूमिरभवत्। तामप्रथयत्। सा पृथिव्यभवत्। तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायादीक्षन्त। भूतानां पतिर्गृहपतिरासीदुषाः पत्नी।।७।।

तद्यानि तानि भूतानि ऋतवस्ते। अथ यः स भूतानां पतिः संवत्सरः सः। अथ या सोषाः पत्नी, औषसी सा। तानीमानि भूतानि स भूतानां च पतिः संवत्सरः उषसि रेतोऽसिञ्चन्। स संवत्सरे कुमारोऽजायत। सोऽरोदीत्।।८।।

तं प्रजापतिरब्रवीत्। कुमार, किं रोदिषि यस्माच्छ्रमात्तपसोऽधिजातोसीति। सोऽब्रवीत्– अनपहतपाप्मा वा अस्मि अविहितनामा। नाम मे धेहीति। तस्मात् पुत्रस्य जातस्य नाम कुर्यात्। पाप्मानमेवास्य तदपहन्ति। अपि द्वितीयम् अपि तृतीयम् तदपहन्ति। तमब्रवीत्। अपि द्वितीयम् अपि तृतीयम्। अभिपूर्वमेवास्य तत् पाप्मानमपहन्ति।।९।।

तमब्रवीत् रुद्रोऽसीति। तद्यदस्य तन्नामाकरोत्– अग्निस्तद्रूपमभवत्। अग्निर्वै रुद्रः। यदरोदीत् तस्माद्रुद्रः। सोऽब्रवीत् ज्यायान् वा अतोऽस्मि धेह्येव मे नामेति।।१०।।

तमब्रवीत् शर्वोऽसीति। तद्यदस्य तन्नामाकरोत् आपस्तद्रूपमभवन्नापो वै सर्वः। अद्भ्यो हीदं सर्वं जायते। सोऽब्रवीत् ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति।।११।।

तमब्रवीत् पशुपतिरसीति। तद्यदस्य तन्नामाकरोत्। ओषधयस्तद्रूपमभवन्। ओषधयो वै पशुपतिः। तस्माद्यदा पशव ओषधीर्लभन्तेऽथ पतीयन्ति। सोऽब्रवीत्– ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति।।१२।।

तमब्रवीत् उग्रोऽसीति। तद्यदस्य तन्नामाकरोत्। वायुस्तद्रूपमभवत्। वायुर्वा उग्रः। तस्माद्यदा बलवद्वाति उग्रो वातीत्याहुः। सोऽब्रवीत् ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति।।१३।।

तमब्रवीत् अशनिरसीति। तद्यदस्य तन्नामाकरोत् विद्युत्तद्रूपमभवत्। विद्युद्वाशनिस्तस्माद्यं विद्युद्धन्ति, अशनिरवधीदित्याहुः। सोऽब्रवीत् ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति।।१४।।

तमब्रवीत् भवोसीति। तद्यदस्य तन्नामाकरोत् पर्जन्यस्तद्रूपमभवत्। पर्जन्यो वै भवः। पर्जन्याद्धीदं सर्वं भवति। सोऽब्रवीत्– ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति।।१५।।

तमब्रवीत् महान् देवोऽसीति। तद्यदस्य तन्नामाकरोत् चन्द्रमास्तद्रूपमभवत्। प्रजापतिर्वै चन्द्रमाः। प्रजापतिर्वै महान् देवः। सोऽब्रवीत् ज्यायान्वा अतोऽस्मि धेह्येव मे नामेति।।१६।।

तमब्रवीत् ईशानोऽसीति। तद्यदस्य तन्नामाकरोद् आदित्यस्तद्रूपमभवत्। आदित्यो वा ऽईशानः। आदित्यो ह्यस्य

सर्वस्येष्टे। सोऽब्रवीत् एतावान् वा अस्मि मा मेतः परो नाम धा इति।।१७।।

तान्येतान्यष्टावग्निरूपाणि। कुमारो नवमः।। सैवा-ग्नेयस्त्रिवृत्ता।।१८।।

यद्वेवाष्टावग्निरूपाणि। अष्टाक्षरा गायत्री तस्मादाहु-र्गायत्रोऽग्निरिति। सोऽयं कुमारो रूपाण्यनुप्राविशत्। न वा अग्निं कुमारमिव पश्यन्ति एतान्येवास्य रूपाणि पश्यन्ति। एतानि हि रूपाण्यनु प्राविशत्।।१९।।"

माध्यन्दिनशतपथब्राह्मणे ६।१।३।।

इत्येतावता महता प्रबन्धेन अग्न्यबोषधिवायुविद्युत्पर्जन्य-चन्द्रमसादित्यपरिच्छेदात् इष्टस्य शिवस्य रुद्रस्य सर्वेश्वरत्वं सर्वमयत्वं सूपपादितं भवति।

३.२ निरवच्छिन्नप्रकाशायाः श्रुतेरनुगामीनि पुराणानि रुद्रस्योत्पत्तिं स्वरूपञ्च कल्पभेदाद् बहुधा स्मरन्ति ईश्वरस्यानुत्तरतत्त्वत्वं प्रतिष्ठापयन्ति। तद्यथा कौर्मे दशमेऽध्याये स्मर्यते यत् 'प्रजाः स्रष्टुकामः ब्रह्मा सुदीर्घकालं तपस्तेपे। किन्तु न किमपि समवर्तत। सुदीर्घकालतप्ते ब्रह्मणि क्रोधो व्यजायत। क्रोधाविष्टनेत्राभ्यामश्रुबिन्दवः प्रापतन्। तेभ्यो ब्रह्मण आत्मभूता भूताः प्रेताश्च प्रादुरभवन्। ततः ब्रह्मणो मुखात् सहस्रादित्यसंकाशः कल्पान्तदहनोपमः देवदेवः शिवः स्वयं तस्य प्राणरूपेण प्रादुरासीत्। प्रकटीभूय सः घोरं रुरोद। रुदते तस्मै प्रजापतिः अष्टौ नामानि व्यधात्। तेष्वाद्यः रुद्र इति प्रथितः। सप्तान्यानि भवः शर्वः ईशानः पशुपतिः भीमः उग्रः महादेवश्चेति नामानि प्रथितानि। ब्रह्मा तान्येव शिवस्य अष्टमूर्तित्वेन प्रत्यभ्यजानत्। ताश्च मूर्तयः-

सूर्यो जलं मही वह्निर्वायुराकाशमेव च।
दीक्षितो ब्राह्मणश्चन्द्र इत्येता अष्टमूर्तयः।।

एतेन स्मृतिवर्णनेन रुद्रस्य शिवमयत्वं सर्वमयत्वञ्च श्रुत्यविरोधेन सम्पन्नं भवति। एतदेव न्यूनाधिकवचनैः पाद्मे विष्णुपुराणे चोपपादितम्। व्यावहारिककालविधायकसूर्यचन्द्ररूपस्य महाकालनाम्ना कीर्तितस्य शिवस्य पूर्वोक्ततनुभिः प्रत्यक्षत्वात् यथोक्तविधानेन विहितो यागः आशुफलदायी भवतीति सर्वे भक्ताः याजकाः यजमानाः स्वस्वानुभवबलेन प्रमाणीकुर्वन्ति।

४.१ सर्वे वेदाध्यायिनो यथावसरं यथाकर्म स्वाध्यायार्थं च स्वस्वशाखानुसारं रुद्रसूक्तानि उच्चरन्ति। यत्रापि श्रौते गृह्ये वा कर्मणि रुद्रकलशस्य स्थापनं भवति अथवा गोविवाहापरपर्यायः वृषोत्सर्गः विधीयते। तत्र अभियुक्ताः रुद्रसूक्तपाठस्य अवश्यकर्तव्यतां वदन्ति। रुद्रसूक्तानां द्विधा प्रयोगो भवति। आद्यः स्वाध्यायप्रार्थनरूप आवर्तनप्रयोगरूपः सुपूजितशिवलिङ्गाभिषेचनकाले उच्चारणरूपः अपरोऽभिषेकप्रयोगश्चेति। उभावपि स्वशाखानुरोधेन निर्वहणीयाविति विधानं मेरुतन्त्रे विततम्। तद्यथा–

शाखायां यस्य तु यथा स्वाध्यायौ पठितावुभौ।
पठनीयौ तथा तेन शाखाभेदं न कारयेत्।।

१२।१४४।।

कश्चिद्यजमानः स्वाध्यायी नास्ति चेत् किंवा स्वशाखामपि न जानाति तदा तेन यज्ञार्थं वृतस्य होतुराचार्यस्य वा शाखाद्वारेणैव रुद्रप्रयोगः संपादनीयः। यथोक्तं तत्रैव–

शाखा तु यजमानस्य ब्राह्मणद्वारतः कृते।।

१२।१४८।।

प्रायेण रुद्राध्यायस्य जपः पाठः स्वाध्यायो वा माध्यन्दिनेषु प्रचलितः इत्यनुभूयते। मेरावपि माध्यन्दिनस्यैव रुद्राध्यायप्रयोगविस्तरः कृतो वर्तते। किन्तु शास्त्रदृष्ट्यात्र तैत्तिरीयाणां महत्त्वं विशेषेण विज्ञाप्यते। मेरुतन्त्रे एवोक्तं यत्–

रुद्रो न यस्य शाखायां परिशिष्टान्वितं स तु।
पठेद्रुद्रं तैत्तिरीयं लुप्तशाखस्तमेव हि।।

१२।१४६।।

अपि च–

**अथवा तैत्तिरीया स्यान्नान्या शाखा प्रपूज्यते।।**

१२।१४७।।

शाखाभेदेन बहूनां मन्त्राणां क्रमभेदोऽपि भवति यथा प्रस्तुते ग्रन्थे बहुत्र पश्यामः। संहितायाः अभावात् मन्त्रप्रतीकं धृत्वान्यशाखायां पठितान् मन्त्रान् कश्चिद्यथावदविचार्य मा प्रयुञ्जीतेति धिया मेरुतन्त्रम् शाखामिश्रणं प्रतिबध्नाति अनेन वचनेन–

**शाखामिश्रं कृतं कर्म यजमानं विनाशयेत्।।**

१२।१४५।

एवं प्रतिशाखं रुद्रजपमुद्दिश्य सूक्तानां निर्धारणं गृह्यपरिशिष्टादिषु लभ्यते।

तदनुरूपमेव जपपूजाभिषेककाम्यप्रयोगस्वाध्यायाद्यर्थं सूक्तानां स्वस्वशाखासंहितासूपलब्धयाऽनुपूर्व्या कुर्यादित्युक्तं भवति।

४.२ शाङ्खायनशाखोक्तरुद्रजपस्य स्वरूपं वैशिष्ट्यञ्च स्मृतिकौस्तुभे आपदेवो निबबन्ध। स हि गृह्यरुद्रपरिशिष्टयोः प्रमाणेन रुद्रजपविधानं द्विविधं विवृणोति। प्रथमे गृह्यपरिशिष्टविधौ रुद्रकलशस्थापनावरे रुद्रजपः भवति। तथा हि रुद्रकलशे स्वशाखोक्तरीत्या,

'कद्रुद्रायेमारुद्रायातेपितरिमारुद्रायस्थिरधन्वने' इति सूक्तचतुष्टयं त्र्यम्बकं चेत्यृक् पठेत्।

अथ च द्वितीयविधौ रुद्रपरिशिष्टोक्तरीत्या–

अग्निमीडे०, येनेदं०, सहस्रशीर्षा०, अहं रुद्रेभिः०, नतमंह०, आशुः शिशानो०, विभ्राड् बृहत्०, कद्रुद्राय०, इमारुद्राय०, आतेपितः०, इमारुद्रायस्थिर०, सोमा रुद्रा धारयेथा० इति सूक्तानि, अथ च जराबोध०, नमो महद्भ्यः ०, रुद्राणामेति०, प्र वः पान्तं०, आ वो राजानं०, कद्धिष्ण्यासु०, हंसः शुचिषद्०, कथामहे रुद्रियाय०, तमुष्टुहि यः०, भुवनस्य पितरं०, रथीतमं कपर्दिनं०, रुद्रस्यये०, अस्मे रुद्रा० प्रवोऽच्छारिरिचे०, त्र्यम्बकं चेति मन्त्राँश्चोच्चारयेदिति विस्तरेण रुद्रजपः विहितः।

४.३ अत्र निबन्धकारः शाङ्खायनशाखाध्यायिनां कृते ऋग्विधानोक्तां विशेषयोजनामुदाहरति। तद्यथा–

ओंकाराद्यास्तु ता जप्त्वा सावित्रीं तदित्यृचम्।
आपोहिष्ठेति सूक्तं च शुद्धवत्योऽघमर्षणम्।
शंवत्यः स्वस्तिमत्यश्च पावमान्यस्तथैव च।
सर्वत्रैतत्प्रयोक्तव्यमादावन्ते च कर्मणाम्।।

एवं सर्वत्र यागेष्वादावन्ते च रुद्रजप कार्य इति विहितं भवति। अत्र सप्तव्याहृतिसहिता सावित्री, आपो हिष्ठा० सूक्तं, शुद्धवत्यः इति, शुचीवो० इति; एतोन्विन्द्र० इति त्रयो मन्त्राः उच्चार्याः किन्तु अस्मत्सविधे वर्तमाने कोशे तु शुचीवो० इत्यस्य स्थाने सस्नुशिरित्येकोऽथर्ववेदमन्त्रः पठितः, एतोन्विन्द्र० इत्यादि त्रयो मन्त्राः ऋग्विधानोक्ते विधौ कोशे च समानम्; ततः ऋतं च सत्यं च इति सूक्तं, शंवत्यः० इत्यादि चतुर्विंशति शंवतीसूक्तमन्त्राः, स्वस्तिनो मिमीता० इति सप्तर्चः स्वादिष्ठयेति पावमान्यः दशर्चः। इति यथोक्तक्रमेण अग्निमीडे० सूक्तात्प्राक् त्र्यम्बकान्ते च पठितास्सन्ति।

इत्थमस्मच्छाङ्खायनशाखीयस्य रुद्रजपस्य कोशे पठितानां सूक्तानां मन्त्राणां च घटनं, सूक्तस्य मन्त्रस्य वा क्रमः ऋग्विधानोक्तदिशा वर्तते। एतेषां सूक्तानां शाकलशाखायां स्थितिमित्थमवमवधारयेत्–

१. ॐतत्स॑वि॒तुर्वरे॑ण्य॒म् ऋग्वेदशाकलपाठे (ऋ.शा.पा.) ३।६२।१०।

२. ॐआपो॒ हि ष्ठा इति ऋ.शा.पा. १०।९।१-९। इति स्थले पठ्यते। अस्यैव सूक्तस्य दशमो मन्त्रोऽथर्ववेदे ६।२३।१ इति स्थल उपलभ्यते, पुनरेकादशात्त्रयोदशं यावत् मन्त्राः ऋ.शा.पा. ८।९५।७-९ स्थले उपलभ्यन्ते।

३. ॐऋ॒तं च॑ स॒त्यं च इति सूक्तम् ऋ.शा.पा. १०।१९०। इत्यत्रोपलभ्यते।

४. ॐशं॒व॒तीः पा॑रयन्त्येतम् इति सूक्तस्य आदितः १-३, ८, ९

मन्त्रा एव मोक्षमूलरसंस्करणस्य ऋ.शा.पा. खिले पठिताः। शिष्टा मन्त्राः शांखायनशाखीया एव सन्ति।

५. ॐस्वुस्ति नो इति सूक्तम् ऋ.शा.पा. ५। ५१।११-१५ स्थले उपलभ्यते। प्रस्तुते कोशे १-५ इति स्थितिः वर्तते। अत्रापि षष्ठसप्तममन्त्रौ शाङ्खायनशाखीयावेव।

६. ॐस्वादिष्ठया इति सूक्तम् ऋ.शा.पा. ९।१ स्थले उपलभ्यते।

७. ॐअग्निमीळे पुरोहितम् इति सूक्तम् ऋ.शा.पा. १।१ स्थले उपलभ्यते।

८. ॐयेनेदं भूतं इति सूक्तस्य षण्मन्त्राः शुक्लयजुर्वेदीयवाजसनेयि-शाखायां ३४।१-६ इति स्थले क्रमभेदेन पठ्यन्ते। अस्मिन् शांखायनोक्ते शिवसङ्कल्पसूक्ते अष्टाविंशतिर्मन्त्राः पठिताः। एते सर्वे मन्त्राश्शुक्लयजुर्वेदे न पठ्यन्ते। तथा च सूक्तमिदं शांखायनशाखायामेव पठितमिति।

९. ॐत्र्यम्बकं यजामहे इति मन्त्रः ऋ.शा.पा. ७/५९/१२ स्थले उपलभ्यते।

१०. ॐसुहस्रशीर्षा पुरुषः इति सूक्तम् ऋ.शा.पा. १०/९० स्थले उपलभ्यते।

११. ॐअहं रुद्रेभिः इति सूक्तम् ऋ.शा.पा. १०/१२५ स्थले उपलभ्यते।

१२. ॐन तमंहो इति सूक्तम् ऋ.शा.पा. १०/१२६ स्थले उपलभ्यते।

१३. आशुः शिशानो इति सूक्तम् ऋ.शा.पा. १०/१०३।१-१३, १५ स्थले उपलभ्यते। अत्र विशेषो यत्कोशे सूक्तस्य 'असौ या सेना' इति चतुर्दशः मन्त्रश्शाकलशाखायां न पठ्यते। एष शांखायनशाखापाठः स्यात्।

१४. ॐविभ्राड् बृहत् इति सूक्तम् ऋ.शा.पा. १०/१७० स्थले उपलभ्यते।

१५. ॐकद्रुद्राय प्रचेतसे इति सूक्तम् ऋ.शा.पा. १/४३।

१६. ॐइमा रुद्राय इति सूक्तम् ऋ.शा.पा. १/११४।

१७. ॐआ ते इति सूक्तम् ऋ.शा.पा. २/३३।

१८. ॐइमा रुद्राय स्थिरधन्वने इति सूक्तम् ऋ.शा.पा. ७।४६।

१९. ॐ सोमारुद्रा धारयेथा इति च सूक्तम् ऋ.शा.पा. ६।७४ इत्यत्रोपलभ्यन्ते।

एतदनन्तरं तत्तत्सूक्तात् काँश्चन संगृहीतान् अपि मन्त्रानुच्चारयेदिति शाङ्खायनरुद्रपरिशिष्टोक्ता व्यवस्था वर्तते। ते मन्त्राः यथा-

२०. जराबोध इति मन्त्रः ऋ.शा.पा.१।२७।१०।

२१. नमो महद्भ्यो इति मन्त्रः ऋ.शा.पा. १।२७।१३।

२२. रुद्राणामेति इति मन्त्रः ऋ.शा.पा. १।१०१।७।

२३. प्र वः इति मन्त्रः ऋ.शा.पा. १।१५५।१।

२४. आवो राजान इति मन्त्रः ऋ.शा.पा. ४। ३।१।

२५. कद्धिष्ण्यासु वृधसानो इति मन्त्रः ऋ.शा.पा. ४।३।१।

२६. हंसः शुचिषद्वसुः इति मन्त्रः ऋ.शा.पा. ४।४०।५।

२७. कथामहे रुद्रियाय इति मन्त्रः ऋ.शा.पा. ५।४१।११।

२८. तमु ष्टुहि यः इति मन्त्रः ऋ.शा.पा. ५।४२।११।

२९. भुवनस्य पितरं इति मन्त्रः ऋ.शा.पा. ६।४९।१०।

३०. रथीतमं इति मन्त्रः ऋ.शा.पा. ६।५५।२।

३१. रुद्रस्य ये इति मन्त्रः ऋ.शा.पा. ६।६६।३।

३२. अस्मे रुद्रा मेहना इति मन्त्रः ऋ.शा.पा.८।६३।१२।

३३. प्र वोऽच्छा रिरिचे इति मन्त्रः ऋ.शा.पा. १०।३२।५।

३४. ॐ त्र्यम्बकम् इति च मन्त्रः ऋ.शा.पा. ७।५९।१२ स्थले उपलभ्यन्ते।

दौर्भाग्यादस्मद्धस्तलेखे तु रुद्राणामेति ऋ.शा.पा. १।१०१।७। आवो राजान ४। ३।१।, कद्धिष्ण्यासु ४।३।१।, अस्मे रुद्रा ८।६३।१२। इति चत्वारो मन्त्रा एवोपलभ्यन्ते। तथापि संपाद्यमाने ग्रन्थे यथोक्तक्रमेण सूक्तानि उपस्थापितानि सन्ति। तथा हि शास्त्रोक्तक्रमेण संरक्षितानां शाङ्खायनशाखोक्त-रुद्रसूक्तानां पुरातनेषु कोशेषु दर्शनात् परम्परया रक्षितत्वाच्च अस्मद्धस्तलेखविषयिण्यप्रामाण्यशङ्कानवकाशैव जाता।

कालप्रभावादभ्यासशैथिल्यात् प्रमादाद्वा व्याहृतयः केचन मन्त्राश्च कोशे नोल्लिखिताः। एते सर्वे मन्त्राः शाकलसंहितायाः तत्तत्स्थानादाहृत्य ग्रन्थसंस्करणं सकलं स्यादिति धिया लुप्यमानाया आदित्यपरम्परायाः मर्यादारक्षार्थं च संस्कृतेऽस्मिन् ग्रन्थे कोष्ठे कृत्वा योजिताः।

इत्थं शाङ्खायनीयरुद्रजपस्य त्रयो विभागाः सन्ति। प्रथमे भागे पूर्वाङ्गरूपेण सावित्रीऋग्, आपोहिष्ठेतिसूक्तं, चत्वारो शुद्धवत्यः मन्त्राः मातृकायां पठ्यन्ते। ऋग्विधानोक्तः –

शुची॑ वो ह॒व्या म॑रुतः शुची॑नां॒ हिनो॑म्यध्व॒रं शुचि॑भ्यः।
ऋ॒तेन॑ स॒त्यमृ॒तसाप॑ आय॒ञ्छुचि॑जन्मा॒नः शुच॑यः पाव॒काः॥

ऋ.शा.पा. ७।५६।१२।

इति मन्त्रः अस्मत्कोशे नोपलभ्यते। पाठपरम्पराया आग्रहाद्वा न पठितः। अत्र तु शुची॑ वो ह॒व्या० इति स्थाने सस्रुशि॒स्तद॑पसो० इति अथर्ववेदे (६।२३।१) पठितो मन्त्रः पठ्यते। मन्त्रभेदकारणं तु नापरोक्षं तथापि कोशमर्यादामनतिक्रम्य ऋग्विधाने संकेतितः मन्त्रोऽत्र पृथक्तयोपस्थापितः। द्वितीये भागे अग्निमीडे० इत्यादि, तृतीये च भागे प्रथमभागस्य पुनरावर्तनमेव भवति।

अत्र शाखामिश्रत्वं नाशङ्कनीयम् एकस्याः संहितायाः शाखान्तरे सामान्यानाम् ऋचामानुपूर्वी प्रायेण न भिद्यते। संहितान्तर एव भिद्यते। तथा च ऋग्वेदस्य मन्त्रः ऋग्वेदस्य शाखान्तरेऽविकलानुपूर्वीक एव स्यात्।

अथास्य कोशस्य लेखन तिथिः संवत् १७६५ वर्षे मार्गशीर्ष वदि ८ भौमे इति पुष्पिकायामुल्लिखितः तथा हि १७०८ ईसवीये, प्रतिरियं पूर्णतामगादिति निवेद्य विरमति–

विदुषामनुज्ञः

प्रकाशपाण्डेयः

ऋग्वेदशाङ्खायनशाखाधृत-

# रुद्राध्यायग्रन्थपरिचय

## वैदिकसंप्रदाय एवं ऋग्वेद की शाङ्खायनशाखा

आदि काल में वेद का प्रादुर्भाव दो भिन्न सम्प्रदायों के रूप में हुआ था। प्रथम 'ब्रह्मसम्प्रदाय' एवं द्वितीय 'आदित्यसम्प्रदाय'। भारतीय परम्परा स्वीकार करती है कि इन दोनों सम्प्रदायों में अखिलरूप से सम्पूर्ण वेद की प्राथमिक सत्ता थी । यह गर्व की बात है कि आज विश्वभर में वैदिकसंहिताओं के अनेक मुद्रित संस्करण उपलब्ध हैं एवं श्रुतिपरम्परा से उन संहिताओं का अध्ययन-अध्यापन का क्रम अत्यन्त क्षीण हो चुका है। तथापि आज भी भारत में कहीं न कहीं ये वैदिकसंहिताएँ गुरुमुख से सुनकर कण्ठस्थ की जाती हैं। उनके पारम्परिक स्वरों से युक्त उच्चारण प्रक्रिया को सुरक्षित रखने का तपः पूर्ण प्रयास किया जाता है।

वेद के अध्ययन की यह परम्परा वेदों के समान ही प्राचीन हैं। इस तथ्य को वेद की अपौरुषेयता के प्रमापक के रूप में भी ग्रहण किया जा सकता है। क्योंकि वेदों की रचना किसने की, कैसे की, इसका ज्ञान सभी उपाय करके भी नहीं किया जा सका है। फिर भी अत्यन्त श्रद्धापूर्वक वेदों का श्रुतिपरम्परा से अध्ययन एवं अध्यापन आज भी किया जाता है तथा उच्चारण की वही प्रक्रिया अपनाई जाती है जो किसी अज्ञात प्राचीन काल में अपनाई गई थी। जब ऐसी परम्परा लोक में स्वीकृत भी है, जीवित भी, जिसके कर्ता का कोई ज्ञान नहीं है। तब यदि उसके विषय में यह कहा जाता है कि वेद किसी शरीरधारी मानव की रचना नहीं है तो वह उचित ही है। शरीर में व्याप्त चेतना के कारण

हम अनवरत अस्तित्व का अनुभव करते रहते हैं। किन्तु यह कोई भी अब तक नहीं बता सका है कि यह आत्मा या चेतना कैसे बनी, या किसने बनाई। जिस प्रकार आत्मा के इस स्वभाव के कारण वह मानव निर्मिति नहीं मानी जाती है, अपितु अनादि एवं अनश्वर मानी जाती है। उसी प्रकार वेद भी अनादि और अनश्वर हैं।

इस अनादि वेद के सम्प्रदायों के विभाजन के विषय में वराह पुराण में एक रहस्यपूर्ण रूपकात्मक इतिहास बताया गया है–

'सृष्टि के आदि में ज्ञानविरोधी शंखासुर या हयग्रीव नामक राक्षस ने ज्ञानरूप वेद का आहरण कर लिया था। भगवान् विष्णु ने उस दानव का वध करके वेद को सृष्टिकर्ता ब्रह्मा को वापस दे दिया। इस घटना के बाद वेद की सुरक्षा सुनिश्चित करने की दृष्टि से ब्रह्मा ने उसके दो प्रतिरूपात्मक भाग किए। एकभाग को उन्होंने आदित्य के पास सुरक्षित कर दिया तथा द्वितीयभाग को अपने मानस पुत्रों अंगिरा, भृगु, अत्रि आदि ऋषियों को वेदोक्त अध्ययनविधि से पढ़ा दिया। उन सभी ऋषियों ने भी अपने शिष्य-प्रशिष्य पुत्र, पौत्र आदि को योग्यतानुसार अध्यापन किया एवं वेद की ज्ञानधारा चलती रही।

काल के प्रभाव से मनुष्यों में विशाल वेदराशि का अलिखित रूप में धारण रखना एवं यथावत् मौखिक उपस्थापन करना असम्भव हो चला था। तब द्वापर युग के अन्तिम चरण में उत्पन्न भगवान् कृष्णद्वैपायन व्यास ने मूल वेद को चार संहिताओं में विभाजित किया तथा अपने चार शिष्यों में प्रत्येक को एक-एक संहिता का अध्यापन किया। पैल को ऋग्वेद, वैशम्पायन को यजुर्वेद, जैमिनि को सामवेद एवं सुमन्तु को अथर्ववेद का ज्ञान दिया। इन शिष्यों द्वारा साक्षात् वेदव्यास से पढ़ी गई ये चारों संहिताएँ **'ब्रह्मसम्प्रदाय'** के अन्तर्गत परिगणित हैं। क्योंकि इसके आदि प्रवाचक ब्रह्मा थे। वेदव्यास के इन चारों शिष्यों ने अपने शिष्यों-प्रशिष्यों को प्रशिक्षित किया एवं कुल मिला कर ब्रह्मसम्प्रदाय के बीस प्रमुख प्रवाचक हुए।'

प्राचीनकाल में ही भगवान् योगीश्वर याज्ञवल्क्य ने 'विदग्ध शाकल्य' से ऋग्वेद का अध्ययन किया। किन्तु किसी कारणवंश गुरु के साथ विवाद हो गया तथा याज्ञवल्क्य ने विदग्धशाकल्य से प्राप्त ऋग्वेद का ज्ञान उन्हें वापस कर दिया। कुछ समय बाद अपने मातामह महर्षि वैशम्पायन की शिष्यता ग्रहण की तथा उनसे यजुर्वेद का अध्ययन किया। किन्तु किसी कारण वश उनसे भी विवाद हो गया और उन्होंने यजुर्वेद का ज्ञान भी गुरु को वापस कर दिया। उस प्रकार वेदविहीन अवस्था में योगीश्वर याज्ञवल्य ने प्रतिज्ञा की कि,

'मैं अब किसी मानवदेही को अपना आचार्य नहीं बनाऊँगा'।

इस निश्चय के साथ उन्होंने तपोबल से भगवान् आदित्य को प्रसन्न किया तथा उनसे चारों वेदों का विधिवत् अध्ययन किया। इस वेदज्ञान के प्रचार एवं उपयोग के लिए गुरु की आज्ञा लेकर योगीश्वर याज्ञवल्क्य ने शांखायन को ऋग्वेद, काण्वमाध्यन्दिन आदि शिष्यों को यजुर्वेद, सामश्रवा अथवा कौथुम को सामवेद एवं शौनक को अथर्ववेद का अध्यापन किया। यह वेद चतुष्टयी 'आदित्यसम्प्रदाय' है। आज उपलब्ध वैदिक संहिताएँ दोनों सम्प्रदायों से सम्बद्ध हैं। इसी कारण इनकी पाठ–परम्परा, उच्चारण, हस्त–संचालन आदि में दोनों सम्प्रदायों का मौलिक अन्तर दिखाई देता है।

शांखायन के पश्चात् आदित्यसम्प्रदायानुगत ऋग्वेद के कोई प्रमुख प्रवाचक नहीं हैं। अतः ऋग्वेद की जिन २१ शाखाओं की चर्चा पुराणों तथा महाभाष्य आदि ग्रन्थों में होती है उनमें शाकल आदि २० 'ब्रह्म सम्प्रदाय' की शाखाएँ हैं एवं इक्कीसवीं शांखायन प्रवर्तित शाखा 'आदित्यसम्प्रदाय' की है।

## शाखा-पदार्थ

शाखा शब्द का बहुधा प्रयोग वैदिक संहिताओं के सम्बन्ध में होता है। उस शब्द के विषय में कुछ पारम्परिक बातें यहाँ प्रासङ्गिक

प्रतीत होती हैं। वैदिक परम्परा 'वेदैकदेश' या वेद के एक स्वयं में पूर्ण भाग को शाखा शब्द से सम्बोधित करती रही है। 'वेद का एक भाग' से ऐसा नहीं समझना चाहिए कि किसी के द्वारा कुछ चुने हुए सूक्तों को भी शाखा कहा जा सकता है। अपितु शाखा शब्द को स्पष्टतः इस प्रकार समझना चाहिए–आदि काल में ब्रह्मा ने एक 'वेद' नामक शब्दात्मक आनुपूर्वी वाले सभी कल्पों में वर्तमान, अविनाशी, सदा मङ्गलरूप ज्ञानराशि का प्रकटन किया था। द्वापर के अन्त में भगवान् वेदव्यास ने ऋग्, यजुः, साम एवं अथर्व रूप में उसकी सामग्री सम्पादित करके प्रवचन किया। इस प्रकार मूलवेद की सामग्री चार परस्पर भिन्न रूपों एवं क्रमों में प्रकट हुई। अतः मूलवेद के सापेक्ष ऋग्, यजुः आदि संहिताएँ उसकी शाखाएँ हैं। क्योंकि ये संहिताएँ सम्पूर्णवेद का प्रतिनिधित्व नहीं करतीं।

इसी प्रकार पूर्वोक्त मूल प्रवाचकों एवं प्रत्येक संहिता के अलग अलग प्रवाचकों ने अपने पास संहिता के जिस स्वरूप की सुरक्षा की तथा प्रचार किया। उनमें व्यास प्रणीत ऋग्वेदादि संहिता अपनी सम्पूर्णता में नहीं हैं। कहीं मन्त्र क्रम में, कहीं सूक्त क्रम में, कहीं सामग्री में, कहीं उच्चारण प्रक्रिया में भेद है। अतः ऋग्वेद आदि व्यास प्रणीत या याज्ञवल्क्य प्रणीत संहिताओं के सापेक्ष शाकल, बाष्कल, शांखायन आदि भी शाखाएँ हैं। ध्यातव्य यह है कि प्रत्येक शाखा की संहिता स्वयं में पूर्ण होती है तथा मूलतः उसीके मन्त्र यज्ञ का अंग बनते हैं।

वस्तुतः आदि प्रवाचकों में से प्रत्येक ने मूलवेद के ऋग्वेद आदि विभागों के सभी स्वरूपों को यथाक्रम सुरक्षित रखा एवं उसका प्रचार किया इस कारण उन्हीं के नाम से शाखाएँ अभिहित की जाती हैं।

## शांखायन-रुद्राध्याय

प्रस्तुत ग्रन्थ ऋग्वेद की शंखायनशाखा से सम्बद्ध है। हिलेब्राण्ट ने शांखायनश्रौतसूत्र के प्राक्कथन में (पृष्ठ १ पर) महार्णव नामक ग्रन्थ से श्लोक उद्धृत किया है जिससे ज्ञात होता है कि शांखायनशाखा की प्रतिष्ठा एवं प्रचार प्राचीन काल से ही उत्तर गुजरात में रहा है। कौषीतकि गोत्र के लोग इस शाखा का अभ्यास करते थे।

आज भी उत्तर गुजरात में ही शांखायनशाखा के अभ्यासियों की सत्ता है। इसी प्रदेश से समागत राजस्थान के बाँसवाड़ा गाँव में निवास करने वाले पण्डित हर्षदलाल नागर के पास से इन्दिरागाँधी राष्ट्रीय कला केन्द्र के कलाकोश विभाग के अध्यक्ष आचार्य गयाचरणत्रिपाठी जी के नेतृत्व में केन्द्र के विद्वानों ने इस हस्तलेख की छायाप्रति प्राप्त की। इस विलुप्त परम्परा के अबतक ज्ञात एकमात्र शांखायनशाखाभ्यासी परिवारजनों से हस्तमुद्राओं सहित पारम्परिक उच्चारण करते हुए दृश्य-श्रव्य का अंकन कराकर केन्द्र ने सी.डी. भी बनाई है जो इस विलुप्त वैदिकपरम्परा की वास्तव में रक्षा करेगी।

यहाँ ध्यान देने योग्य बात है कि शांखायनशाखाभ्यासी नागरबन्धु ऋग्वेद के उच्चारण के साथ हस्तमुद्राओं का उसी प्रकार संचालन करते हैं जिस प्रकार शुक्लयजुर्वेद के उच्चारण काल में किया जाता है। आज कल कुछ लोगों को ऐसा भ्रम होगया है कि हस्तमुद्राओं का संचालन उत्तरभारत की विशेषता है। हस्तमुद्रासंचालन के बिना विशुद्ध स्वरों के साथ उच्चारण करना दक्षिण भारत की विशेषता माना जाता है। तथ्य यह नहीं है। वर्तमान में उपलब्ध ऋग्वेद शाकलशाखा की संहिता है। शाकलशाखा एवं दक्षिण में प्रधानतया प्रचलित तैत्तिरीययजुर्वेद ब्रह्मसम्प्रदाय से संबद्ध हैं। ब्रह्मसम्प्रदाय में हस्तमुद्रासंचालन का विधान न होने के कारण ये दोनों संहिताएँ हस्तमुद्रासंचालन विहीन अभ्यसित होती हैं। किन्तु ऋग्वेदीय शांखायनसंहिता एवं माध्यन्दिनशुक्लयजुर्वेद आदित्यसम्प्रदाय

से संबद्ध हैं दोनों में हस्तमुद्रासंचालन का विधान है। वस्तुतः यह भेद उत्तर एवं दक्षिण भारत के उच्चारण का नहीं है। अपितु वेद के प्राचीनतम सम्प्रदायों का वैशिष्ट्य है।

यह दुःखद सत्य है कि भारत में वैदिक संहिताओं के पारम्परिक रूपों के ज्ञाता अब अंगुलिगण्य ही रह गए हैं। उसमें शांखायनशाखा का तो मानों लोप ही हो गया है। इन्दिरागाँधी राष्ट्रीय कलाकेन्द्र का कलाकोश विभाग प्रयास पूर्वक इस शाखा के अध्यायी को प्रकाश में लाया है। मुझे शांखायनरुद्राध्याय की प्रकाशनीय प्रति निर्माण करने की पुण्यमयी प्रेरणा एवं पाण्डुलिपि आदरणीय गुरु आचार्य गयाचरणत्रिपाठी जी से मिली है। यह ग्रन्थ सभी सत्पात्रों एवं शिवभक्तों के लिए उपयोगी बने इस भाव से मन्त्रों का भाषा-अनुवाद पूर्वक संपादन करने का प्रयास किया गया है। परमशिव के अनुग्रह से शांखायनरुद्राध्याय की प्रकाशित प्रति सुलभ हो रही है।

### रुद्र एवं रुद्रयाग

देवीभागवतमहापुराण कहता है कि यज्ञ के तीन प्रकार होते हैं– १. वैदिक याग या श्रौत याग। २. तान्त्रिक याग ३. मिश्रयाग जिसमें वैदिक एवं तान्त्रिक दोनों विधानों का मिश्रित रूप होता है। शिव की उपासना अत्यन्त श्रद्धा के साथ पूरे भारत में वैदिक-तान्त्रिक विधि से की जाती है।

परमेश्वर शिव को वेद रुद्र नाम से अभिहित करता है। रुद्र विश्वरूप हैं। प्रत्येक प्राकृतिक तत्त्व उन्हीं की मूर्ति हैं। शतपथ ब्राह्मण के छठे काण्ड के प्रथम प्रपाठक में भगवान् वेद रुद्र के सर्वमयत्व का प्रकाशन करते हुए अग्नि, जल, वनस्पति, वायु, विद्युत्, पर्जन्य, चन्द्र एवं सूर्य के रूप में उनकी प्रतिष्ठा करते हैं।

शिव की इन मूर्तियों या स्वरूपों का वर्णन पुराणों में भी प्रमुखता के साथ हुआ है। कूर्मपुराण (अध्याय दस) में वर्णन है कि ब्रह्मा

अत्यन्त दीर्घ काल तक तप करने के बाद भी सृष्टि के आरंभण में सफल नहीं हुए। तब उन्हें क्रोध हुआ। उस अवस्था में उनके मुख से प्राण के रूप में भगवान् शिव प्रकट हुए एवं अत्यंत भीषण रुदन किया। ब्रह्मा ने उन्हें सूर्य, जल, धरती, अग्नि, वायु, आकाश, दीक्षितब्राह्मण एवं चन्द्रमा। इन आठ तत्त्वों से उनका तादात्म्य करते हुए उन्हें रुद्र, भव, शर्व, ईशान, पशुपति, भीम, उग्र एवं महादेव इन नामों से अभिहित किया। इसी प्रकार का वर्णन पद्मपुराण एवं विष्णुपुराण के साथ-साथ कालिदास आदि महाकवियों ने भी किया है।

इस प्रकार यह स्पष्ट है कि भारतीय वैदिक तथा पौराणिक परम्परा शिव को सर्ग स्वरूप एवं कालस्वरूप परमचेतना स्वीकार करती है, अथवा देश(Space) एवं काल(Time) का परमचेतनात्मक अद्वैतरूप मानती है। शैवदर्शन का सम्पूर्ण सिद्धान्त शिव को शरीरी एवं विश्व को शरीर स्वीकार करने पर आधारित है।

इस परमशिव की स्तुतियों का उच्चारण सभी वेदाध्यायी अनेक श्रौत एवं गृह्य कर्मों में नित्य, नैमित्तिक तथा काम्य तीनों दृष्टियों से करते है। जब भी श्रौत या गृह्य कर्म में रुद्रकलश की स्थापना होती है अथवा गोविवाह या वृषोत्सर्ग कर्म किया जाता है तब, तथा आधिभौतिक आधिदैविक उपसर्गों की स्थिति में रुद्रसूक्तों के जप का विधान शास्त्रों में किया गया है।

मेरुतन्त्र में वैदिक रुद्रसूक्तों के दो प्रकार के प्रयोग बताए गए हैं। प्रथम आवर्तन प्रयोग अपनी शाखा से सम्बद्ध शास्त्रों में बताए सूक्तों के ही पाठ करने से संबद्ध है। अपनी शाखा से भिन्न शाखा के मन्त्रों को यदि कोई भी व्यक्ति प्रयोगकाल में पढ़ता है तो यज्ञ यजमान के लिए हानिकारक होगा। यदि कोई ऐसा याजक है जो अपनी पारम्परिक वैदिक शाखा का स्वाध्यायी नहीं है या उसने गुरु से नहीं पढ़ा है। कोई ऐसा याजक है जिसे अपनी शाखा का ज्ञान ही नहीं है। तब याग के लिए

जिस पुरोहित का वरण किया गया है उसकी अपनी शाखा के अनुसार ही अनुष्ठान संपन्न होगा ऐसा मेरुतन्त्र (१२।१४८) का विधान है।

मेरुतन्त्र (१२।१४५-४७) इस विषय में दूसरा महत्त्वपूर्ण विधान करता है कि यदि किसी याजक की शाखा में रुद्राध्याय विहित नहीं है अथवा उसकी शाखा आज लुप्त है, कहीं भी पारम्परिक रीति से नहीं पढ़ी-पढ़ाई जाती, तब उसको केवल तैत्तिरीयसंहिता में विहित रुद्रसूक्तों का पाठ करना या कराना चाहिए। माध्यन्दिनसंहिता आदि अन्य किसी शाखा की संहिता से मन्त्रों को ग्रहण नहीं करना चाहिए।

तीसरी महत्त्वपूर्ण बात यह है कि दो शाखाओं से मन्त्रों का संकलन करके किसी को भी पाठ नहीं करना चाहिए। अन्यथा यज्ञ हानिकारक होगा।

सभी उपलब्ध शाखाओं के श्रौत-गृह्य-परिशिष्ट आदि सूत्रों में रुद्रविधान है तथा उसी के अनुसार रुद्रयाग करने से शास्त्रोक्त अभीष्ट सिद्धि होती है।

स्मृतिकौस्तुभकार आपदेव ने ऋग्वेदीय शांखायन शाखा के रुद्रजप का विधान शांखायन गृह्यपरिष्ट एवं ऋग्विधान के प्रमाणों को उपस्थापित करते हुए अत्यन्त स्पष्टता से किया है। शांखायनों के रुद्रजप का दो विधान हैं। प्रथमविधि में रुद्रकलश पर 'कद्रुद्राय, इमारुद्राय, या ते पितः, इमारुद्राय स्थिरधन्वने' इन चार सूक्तों एवं त्र्यंबकं० मन्त्र का पाठ करने का विधान है। यद्यपि ये सूक्त एवं मन्त्र शाकलशाखा में भी उपलब्ध है किन्तु उच्चारण में भेद होने से शांखायन ऋग्वेद से ही सूक्त ग्रहण करने चाहिए। द्वितीय पद्धति में प्रकृत ग्रन्थ के सभी सूक्तों का विधान किया गया है। अग्निमीडे० से लेकर त्र्यम्बकं० तक के सभी सूक्तों एवं मन्त्रों का विधान उसी क्रम से है जिस क्रम से ये हस्तलेख में प्राप्त होते हैं। ये मूल रुद्रपाठ के मन्त्र हैं। इसके अतिरिक्त शांखायनों के सभी श्रौत कर्मों के आदि एवं अन्त में सप्तव्याहृति सहित सावित्री मन्त्र, आपोहिष्ठा०,

